ईशानबाह्ये चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्याः सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा वेदपदस्तु तेन समका देवार्य्यमाद्यास्त्वमी
कोणेऽष्टौ द्विपदास्तथाष्टमरुतः कोणेऽर्द्धभागाद्‌
बहिः ।
शेषा एकपदाः सुरास्तु कथिता वेदत्तुंके-६४
ऽथो नव
ब्रह्मा षट्पदिनोऽर्य्यमादिविबुधा ईशादयश्चै-
कशः ॥
ब्रह्मा कलांशो वसुनोऽर्य्यमाद्याः
कोणेऽष्ट बाह्येऽपि च सार्द्धभागाः ।
विधाष्टकोणे द्विपदास्तथाष्टौ
शेषाः सुरा एकपदाः शतांशे ॥*॥
ब्रह्माजिनांश२४ उदितः शिवतोऽर्य्यमाद्या
कोणेषु सार्द्धपदतोऽपि तथैव चाष्टौ ।
शेषा द्विभागसमका रविभागकोऽयं
पूज्यो रथाश्वगजवाहनकेऽस्तुयन्त्रे ॥
यन्त्रे त्रयोदशपदैरपि पूजनीय-
स्तत् पञ्चविंशतिरजो दशतोऽर्य्यमाद्याः ।
कोणेऽश्चयोऽमरगणा बहिके कलांशा
भद्रेऽधिकं रविविभागपरे द्विभागाः ॥*॥
द्वात्रिंशत् कमलासनोऽर्य्यमसुखाः स्युः सूर्य-
भागा क्रमात्
कोणेऽन्येऽष्टसुरा द्विभागसहिता बाह्येषु
सार्द्धांशकाः ।
अष्टौ रामपदाः पुनर्द्विपदकाः षड्भागिनोऽष्टौ
सुराः
क्षेत्रे षस्रवचन्द्रभागसहिते १९६ स्याद्‌देवतानां
क्रमः ॥ * ॥
वेदांशो विधिरर्य्यमप्रभृतयश्चांशा नवस्वरके
कोणेऽन्येऽष्टपदार्द्धगाः परसुराः षड्भागहीने
पदे ।
वास्तोर्मन्दयुगांश ४९ एवमधुनाष्टांशेष्वतुः-
षष्टिके
सर्व्वैः सूत्रमितान् सुधीः परिहरेद्भित्तौस्तुलाः
स्तम्भकान् ॥ * ॥
रेखाद्वयं कोणगतं विधेय-
मंशान्तरेणैव तु कर्णसूत्रात् ।
यदर्द्धसूत्रैः कथितं तु पद्मं
तत्पोडनात् स्वामिधनप्रणाशः ॥
प्रोक्तं चतुर्व्विंशतिलाङ्गुल यत्
पादार्द्धगं हानिकरं प्रजायाः ।
षड्भिस्तु सूत्रैर्मरणाय वज्रं
कोणे त्रिशूलञ्च रिपोर्भयाय ॥
परीक्ष्य भूमीमवसेचयेत्तां
सुपञ्चगव्येन ततो विलेख्या ।
रेखा सुवर्णेन मणिप्रबालैः
पिष्टाक्षतैर्व्वापि पुंगरुदूर्व्वैः ।
द्वात्रिंशदंशाः पृथुले च दैर्घ्ये
कोणे वर्ण्या जिनसंख्या२४भागाः ।
शतंतु पदानां कथितं सहस्रं
क्षेत्रञ्च सर्व्वोत्तममेव वास्तोः ॥ * ॥
मध्ये ब्रह्मा पूजनीयः शतांशै-
श्चत्वारिंशद्भिः पदैर्व्वाह्यवीथी ।
प्रोक्ता देवा अर्य्यमाद्या अशीत्या
मध्ये कोणेऽष्टौ शतं चाष्टषष्ट्या ॥
कोणेऽश्चयो नन्दपदैः सुराश्च
शेषाश्च बाह्ये वसुभागिनश्च ।
वीथी च बाह्ये रविभागयुक्तं
शतं पदानां कथितं मुनीन्द्रैः ॥
दुर्गप्रतिष्ठाविषये निवेशे
तथा महार्चासु च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्येष्ठलिङ्गे
वास्तुः सहस्रेण पदैः प्रपूज्यः ॥*॥
त्रिमेखलं शङ्करदिग्विभागे
कुण्डं प्रकुर्य्यात करतो शुणामम् ।
होमं सुराणां शतमष्टयुक्तं
प्रत्येकमष्टाधिकविंशतिं वा ॥
मध्वाज्यदध्नैर्दधिशर्कराभ्यां
क्षीरोत्तिलैर्व्रीहियवैर्नवान्नैः ।
पलाशदूर्व्वाङ्कुरदुग्धवृक्षै-
र्होमं तदन्ते सुरपूजनञ्च ॥
ईशे घृताक्षमपरे सघृतौदनञ्च
दद्याज्जयाय हरिताम्बरमेव कूर्म्मम् ।
रत्नानि पिष्टकमयं कुलिशं सुरेन्द्रे
धूम्रं वितानमुदितञ्च दिवाकरस्य ॥
गोधूमयुक्तं घृतमेव सत्ये
मत्स्यान् भृशे शष्कुलिमन्तरीक्षे ।
वह्नौ स्रुचं पूष्णि तथैव लाजा
दद्यादधर्म्मे चणकौदनञ्च ॥
मध्वन्नञ्च गृहक्षताय यमतो मांसौदनं दापयेत्
गन्धर्व्वे शतपत्रमोदनयुतं भृङ्गेऽजजिह्वां तथा ।
प्रोक्ता नीलजवा मृगाय पितृतो देयाश्च सर्व्वो
दकाः
पेष्टं कृशरकं तथैव विधिवद्दद्याच्च दौवारिके ॥
सुग्रीवाय च पूपका गणवरे श्वेतप्रसूनं पयः
पद्मं वारुणके सुराप्यसुरके तैलं तिलाः शेषके ।
पापाख्येऽपि च पक्वमांसमुदितं रोगाय सर्व्वौ-
षधीः
गोक्षीरं फणिने च मुख्यविबुधे श्रीखण्डभक्ते
तथा ॥
भल्लाटाय सुवर्णकं धनपतौ मण्डाज्यदुग्धं तथा
शक्तून् पर्व्वतकेऽदितेस्तु लपिकां दद्याद्दितौ
पूरिकाम् ।
सक्षीरं दधिकं क्रमेण विहितं त्वापापवत्से तथा-
प्यर्य्यमूर्णेऽरुणचन्दनञ्च पयसा युक्ता तथा
शर्करा ॥
सावित्रेऽपि च लड्डुकाश्च सवितुः पूपा गुडा
सद्घृता
देयं वाथ विवस्वते घृतयुतं दुग्धं तथा मोदकाः ।
इन्द्राख्ये कुसुमस्रगिन्द्रजयके देयं तथा चम्पकं
मैत्रे दुग्धघृतञ्च गुग्गुलुयुतो गन्धस्तथा रुद्रके ॥
तत्सिद्ध्यमन्नस्त्वपि रुद्रदासे
सद्रत्नमालां पृथिवीधराय ।
पयस्वलां गामन्ततं घटञ्च
दद्याद्विधौ स्वर्णमतोऽखिलेभ्यः ॥
सुरास्थि मांसं विहितं चरक्यै
तथैव पीतौदनको विदार्य्यै ।
रक्तौदनैः पूतनिकार्च्चनीया
मत्स्यासवेनापि तथैव पापाः ॥
मांसं पक्वं पिलिपिञ्जाय तज्जृम्भायै विहितं
सद्यः ।
स्कन्दाय तक्रदिरायुक्तं चार्य्यमृणे दिशि
पूर्व्वादौ ॥
यः पूजयेद्वास्तुमनन्ययुक्त्या
न तस्य दुःखं भवतीह किञ्चित् ।
जीवत्यसौ वर्षशतं सुखेन
स्वर्गे नरस्तिष्ठति कल्पमेकम् ॥”
इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे वास्तुलक्षणम् २[अध्यायः ॥ * ॥
“आयर्क्षव्ययतारकांशकविधुं राशिं गृहाद्यं
तथा
धान्यं सौख्ययशोऽभिवृद्धिरधिका यत्नादतः
कथ्यते ।
आयास्तु ध्वजधूमसिंहशुनका गोरासभेभाः
क्रमात्
ध्वाङ्क्षस्त्वष्टम आयमेषु विषमाः श्रेष्ठाः सुराणां
गृहे ॥
मानं देवगृहादिभूपसदने शास्त्रोक्तहस्तेन तत्
गेहे कर्म्मकरस्य नाथकरतः शास्त्रेण देयं गृहे ।
शय्यो दण्डकराङ्गुलादिमपि ते हस्ताङ्गुलैरंशतः
क्षेत्रस्याप्यनुमानतोऽपि नगरे दण्डेन मानं पुरं ॥
आयः कल्प्यो हस्तमेयैः करैश्च
क्षेत्रे मात्रानिर्म्मिते मात्रकाभिः ।
मध्ये पर्य्यङ्कासने मन्दिरं च
देवागारे मण्डपे भित्तिबाह्ये ॥
छत्रे देवगृहे द्विजस्य भवने स्याद्वेदिकायां जले
विस्तारोच्छ्रयवस्त्रभूषणमठागारेषु शस्तो ध्वजः ।
धूमो वह्न्युपजीविनामपि गृहे कुण्डे च होमो-
द्भवे
सिंहद्वारनृपालयेऽस्त्रनिचये सिंहश्च सिंहा-
सने ॥
चण्डाले शुनको विशास्तु वृषभो हर्म्ये हयानां
हितो
वाणिज्ये घनभोजनस्य भवनेऽथो बाह्यगेहे
खरः ।
वादित्रे स्वरजीविनामपि गृहे शौद्रे गजो
योजितो
याने स्त्रीगृहवाहने च शयने शस्तो गृहे हस्ति-
नाम् ॥
ध्वाङ्क्षः शिल्पिनपक्षिणां हितकरस्तेषां मुखं
नामवत्
ध्वाङ्क्षः काकमुखो बिडालवदनो धूमो ध्वजो
मानुषः ।

सर्व्वे पक्षिपदा हरेरिव गजो हस्तौ नरस्येव तु प्राच्या: स्वदिग्गता: क्रमेण पतयो ज्ञायौ च ते सम्मुखा: ॥*॥

देया: सिंहगजध्वजादिवृषभे सिंहध्वजौ कुञ्जरे सिंहो वै ध्वज इष्यते न वृषभोऽन्यत्रापि देयो बुधै: ।

सिंहो हस्तिवृषालये न्वतिकरस्थायस्य वक्रं गृहं तस्मिन्नेव च वामदक्षिणदिग्द्वारे स आय: शुभ: ॥

व्यासे दैर्घ्यगुणेऽष्टभिर्विभजिते शेषो ध्वजाद्याय कोऽष्टघ्ने तद्गुणिते च धिष्ण्यभजिते स्याद्दस्रमघादिकम् ।

नक्षत्रे वसुभिर्व्ययोऽपि भजिते हीनस्तु लक्ष्मीप्रदस्तुल्यायश्च पिशाचको ध्वजन्तते संवर्द्धितो राक्षस: ॥

तन्नाले व्ययहर्म्यनामसहितं भक्ते त्रिभिश्चांशक: स्यादिन्द्रोपमभूपतिक्रमवशाद्देवे सुरेन्द्रो हित: ।

वेश्मामेत्र यमस्तु पुण्यभवने नागे तथा भैरवे राजांशो गजवाजियाननगरे राजालये मन्दिरे ॥*॥

यावद्गृहर्क्षं गणयेत् स्वधिष्ण्या-
त्ताराविभक्ते नवभिश्च शेषा: ।
बुधैस्तृतीया सकले विवर्ज्या
या पञ्चमी सप्तमिका न शस्ता ॥

धिष्ण्यानीह च सप्तश: क्रमतया वह्न्येस्तु पूर्व्वादित: सृष्ट्या तानि भवन्ति यत्र गृहभं तत्रैव चन्द्रो भवेत् ।

हानिं पृष्ठगत: करोति पुरतस्त्वायु:क्षयं चन्द्रमा: पार्श्वे दक्षिणवामके शुभकरोऽग्रे देवभूपालये ॥

प्रीति, स्यात् समसप्तमी च दशमी चैकादशी शोभना दारिद्र्यं शुभता करोति मरणं षष्ठी कलि: पञ्चमी ।

मेषोऽश्विनित्रये हरिस्तु पितृभाच्चापश्चये मूलत: शेषे स्युर्नव राशय: परमते नन्दांशकैस्ते पृथक् ॥

भौमो वृश्चिकमेषयोर्वृषतुले शुक्रस्य राशिद्वयं कन्या युग्मबुधस्य कर्कसदनं चन्द्रस्य सिंहो रवे: ।

जीवो मीनधनु:पतिर्मृगघटौ मन्दस्य गेहे स्मृतं मित्रारण्यककुजेन्द्रदेवगुरवोऽन्ये चारयस्ते मिथ: ॥

देवर्क्षं श्रुतिपुष्यभेऽश्विभस्त्यां मैत्रानिलं पौष्णभं हस्तादित्यमथोऽसुरस्तकविधौ पूर्व्वोत्तरा रुद्रभम् ।

रक्षोमूलविशाखिकाग्निपितृभं चित्रा धनिष्ठाद्वयं ज्येष्ठाश्लेषमघोऽथ दैत्यमनुजे मृत्युस्तु दैवे कलि: ॥

वैरं चोत्तरफल्गुनीयुगलयो: स्वातीभरण्योर्द्वयो रोहिण्युत्तरषाढयो: श्रुतिपुनर्व्वस्वोर्विरोधं तथा ।

चित्राहस्तभयोश्च पुष्यफणिनोर्ज्येष्ठाविशाखाख्ययो: प्रासादे भवनासने च शयने नक्षत्रवैरं त्यजेत् ॥

विप्रा: कर्कभषालिनो निगदिता: सिंहाजचापा नृपा विट्कन्या मकरी वृषोऽथ वृषला युग्मश्च कुम्भस्तुला ।

वर्णेनोत्तमकामिनी च भवनं वर्ज्यं बुधैर्यत्नत: श्रेष्ठा द्वादश नन्दराशगुणतो विप्र क्रमाद्राशय: ॥

अश्वोऽश्विनीशतभयोर्यमपुष्ये हस्ती
छागोऽग्निपुष्य उरगोऽपि विधात्रमौम्ये ।
मूलार्द्रयो: शुनक ओतुरहावदित्ये
पूर्व्वा मघासु मत उन्दुरेव योनि: ॥

गौर्भद्रोत्तरफल्गुनीत उदिता स्वाती करे माहिषी व्याघ्रास्त्वाद्विशाखयोश्च हरिणो ज्येष्ठानुराधाभयो: ।

पूषाढश्रवणे कपिर्निगदितो वैश्वाभिजिन्नाकुलं पूभाद्यां नभमे मृगेन्द्र उदितो वैरं त्यजेल्लोकत: ॥

आयर्क्षतारा व्ययमंशकश्च
ह्येकत्र कृत्वा विभजेत् क्रमेण ।
तिथ्या च वारेण तथैव लग्नै:
शेषैस्तु भान्येव भवेयुरर्क्षै: ॥
दैर्घ्यं पृथुत्वेन च ताडनीयं
तयोर्यदैक्यं गुणयेत् क्रमेण ।
शेषेऽधिमाथो वसुभाजितेऽस्मिन्
सम: प्रशस्तो विषमस्तु नैव ॥ * ॥

वर्गाष्टकस्य पतयो गरुडो विडाल: सिंहस्तथैव शुनकोरगमूषकैणा: ।

मेढाककारच-ट-ता: प-य-शाश्च वर्गा य: पञ्चम: स रिपुरेव बुधैर्विवर्ज्य: ॥

अश्विन्यादिकभत्रयं फणिनिभं चक्रं त्रिनाड्युद्भवं ह्येकस्यां वरकन्ययोश्च यदि भं तन्मृत्युदं चाग्नत: ॥

नाडीसैवकमित्रगेहपुरतस्त्वेका शुभा सर्वदा आयादित्रिकपञ्चसप्तनवभिस्त्वङ्गैर्गृहे सौख्यदम् ॥

गुणगणं लघुदोषसमन्वितं
भवनदेवगृहादिकमिष्यते ।
जललवेन शिखी बहुतापवा-
न शममेति गुणैरधिको यत: ॥"

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे आयादिलक्षणं ३ अध्याय: ॥

"वापीकूपतडागदेवभवनान्यारामयागादिकं तीर्थानामवगाहनञ्च विधिवत् कन्याप्रदानादिकम् ।

सर्व्वं पुण्यमिदं नृप: स लभते य: कारयेत् पर्व्वते दुर्गं सर्व्वजनाय शर्म्मजननं विश्राममेकं परम् ॥

सिंहो वैरिपराभवं प्रकुरुते तिष्ठन् गिरौ गह्वरे दुर्गस्थो नृपति: प्रभूतकटकं शत्रुं जयेत् सङ्गरे ।

कैलासे नगरं शिवेन रचितं गौर्य्यादिसंरक्षणे दुर्गं पश्चिमसागरे च हरिणाप्येषां किमन्योच्यते ॥

भूदुर्गं जलदुर्गमद्रिविषये दुर्गं भवेद्गह्वरे तेषामुत्तममद्रिमूर्ध्नि रचितं तद्वैरिणां दुर्गमम् ।

अन्नाद्यैर्घृततोयतैललवणै: काष्ठैस्तृणाद्यैस्तथा यन्त्रोपस्करबाणशस्त्रसुभटै: संपूरयेद्भूमिप: ॥

माहेन्द्रं चतुरस्रमायतपुरं तत् सर्व्वतोभद्रकं वृत्तं सिंहविलोकनं सुवृत्तनायतं तथा वारुणम् ।

नन्द्याख्यञ्च विमुक्तकोणमथ नन्द्यावर्त्तसंस्थाकृति प्रोक्तं तद्द्यववज्रयन्त्रमपि तद्द्विधं गिरेर्मस्तके ॥

पुष्पं चार्द्धदलोपमञ्च पुरुषाकारं पुरं पौरुषं श्लिष्टं कुत्रचित्तु भूधरस्य कथितं दण्डाभिधं दैर्घ्यकम् ।

शान्तं प्राक् सरिता परत्र कमलं याम्ये नदी धार्मिकं ह्याभ्यां चैव महाजयञ्च धनदाशायां नदी सौम्यकम् ॥

दुर्गैकेन युतं श्रियाख्यनगरं ह्याभ्यां रिपुघ्नं पुरं त्वष्टास्रं कथयन्ति स्वस्तिकमिति प्रोक्ता गुणा विंशति: ।

भूपानां सुखदा यशोऽर्थफलदा: कीर्त्तिप्रतापोद्भवा लोकानाञ्च निवासतो विरचिता: प्राक्शम्भुना ते गुणा: ॥"

इति पुराणां विंशतिगुणा: ॥*॥

"वह्निर्भीतिकरं त्रिकोणनगरं षट्कोणकं शोषदं वर्ज्ये वज्रभयञ्च शाकटपुरे रोगाग्निभूते कलि: ।

प्रोक्तं तस्करभीतये द्विशकटं कर्णाधिकेऽर्थक्षयो दोषा: सप्त भयावहा: प्रकटिता ये विश्वकर्म्मोदिता: ॥"

इति पुराणां सप्त दोषा: । * ॥

"वक्ष्येऽथो त्रिविधं पुरं सनिमितं मध्योत्तमं कन्यसं तेषां हस्तसहस्रमन्तिमपुरं मध्यं तत: साष्टकम् ।

ज्येष्ठं युग्मसहस्रमेषु चरमं भागाष्टकेनाधिकं मध्यं द्वादशभागत: शशिकलं ज्येष्ठं विदध्यात् सुधी: ।

मार्गा: सप्तदशैव चादिमपुरे हीनं चतुर्भि: पुरं प्रोक्तं कन्यसमेव मार्गनवभिर्दैर्घ्ये तथा विस्तरे ।

ग्रामश्चैव पुरार्द्धतो हि तदनु ग्रामार्द्धत: खेटकं खेटार्द्धेन तु कूटमेव विबुधै: प्रोक्तं तत: खर्व्वटम् ।

चक्राणाञ्च युगाष्टषोडशशतक्षं भूपतीनां पुरं तन्मध्ये दशधा वदन्ति सुनयो हस्ता सहस्रैस्तु सत् ।

आयामे वसुपादसार्द्धवसुतो भागः प्रशस्तोऽधिक-
स्त्वेकैकश्च चतुर्विध निगदितं कार्य्यं समं कर्णयोः ॥

षट्त्रिंशतः षट् क्रमतो विशुद्धा
देवे पुरे चत्वरके क्रमेण ।
यदृच्छया मानमुशन्ति केचित्
प्राकारकोष्ठस्य च भित्तिकायाः ॥*॥
पूर्व्वापरास्याः पुरसम्मुखाश्च
देवाः शुभा नोत्तरदक्षिणाश्च ।
भङ्गं पुरस्यापि पराङ्मुखास्ते
कुर्व्वन्ति धात्वर्कजनार्द्दनेशाः ॥

ब्रह्मा विष्णुशिवेन्दुभास्करगुहाः पूर्व्वापरास्याः शुभाः
प्रोक्तौ सर्व्वदिशामुखौ शिवजिनौ विष्णुर्विधाता तथा ।
चामुण्डा ग्रहमातरो धनपतिर्हेमासुरो भैरवो
देवा दक्षिणदिङ्मुखाः कपिवरो नैर्ऋत्यवक्त्रो भवेत् ॥

मार्गाः सप्तदशाङ्कपञ्चशिखिनो युग्मं पुरात् खर्व्वटं
मार्गाः षोडश सूर्य्यविंशतिकराः कार्य्यास्त्रिधा विस्तरे ।

प्राकारोदयविंशहस्तमभितो द्वाभ्यां विहीनोऽधिको
व्यासार्द्धेन तदूर्द्ध्वतश्च कपिशीर्षाण्यष्टमात्रान्तरम् ॥

प्राकारेऽपि च कोष्ठका दशकराः सूर्य्येन्द्रहस्तास्तथा
प्रोक्तास्तेन समैव कोणसहिता विद्याधरी मध्यमा ।
तस्या वाथ सुरङ्गके च विविधं युद्धासनं कारयेत्
प्राकारोदयतो विधाय परिखाविस्तार उक्तो बुधैः ॥

विद्याधरीकोष्ठकयोश्च मध्ये
बाहुप्रमाणं शरदामहस्तम् ।
पञ्चाधिकं पञ्चकरेण हीन-
मिति त्रिधा वास्तुमतो हितश्च ॥*॥
दुर्गोदयं नन्दकरप्रमाणं
भित्त्या समं सप्तदशैव केचित् ।
एकोनविंशं पृथुलं चयानां
दिक्कालसूर्य्याष्टकरा वदन्ति ॥

ताम्बूलं फलदन्तगन्धकुसुमं मुक्तादिकं यद्भवेत्
राजद्वारसुराग्रतो हि सुधिया कार्य्यं पुरे सर्व्वतः ।
प्राग्विप्राश्च नृपा हि दक्षिणदिशि स्युः सौम्यतः शूद्रकाः
कर्त्तव्याः पुरमध्यतोऽपि वणिजो वैश्या विचित्रैर्गृहैः ॥

ईशे रङ्गकराः कुविन्दरजका वह्नौ च तन्त्रीविनः
प्रोक्ता अन्त्यजचर्म्मकारवरटाः स्युः शौण्डिका राक्षसे ।
पण्यस्त्रीनिर्ऋतौ च मारुतयुते नौगौ न्यसेल्लुब्धकान्
वापीकूपतडागकुण्डमखिलं तोयं तथा वारुणे ॥

सिंहद्वारचतुष्टयञ्च खटकोद्वाराणि चाष्टौ तथा
कर्त्तव्यानि दृढार्गलानि रुचिरैः कापाटकैः सुदृढैः ।
कीर्त्तिस्तम्भनृपालयामरगृहैर्हट्टैः सुधानिर्म्मितैर्हर्म्यैश्चोपवनैर्जलाश्रययुतैः कार्य्यं पुरं शोभनम् ॥”

इति नगरप्रमाणम् ॥ * ॥

“यन्त्राः पुराणामथ रक्षणाय
संग्रामवह्न्यम्बुसमीरणाख्याः ।
विनिर्म्मितास्ते जयदा नृपाणां
भवन्ति पूज्याः सुरया च मांसैः ॥

हस्ता अष्ट च भैरवो नरकरस्याङ्को दशाद्यो भवेद्दुर्गो भीमगजोऽपि भास्करकरैर्युग्मस्तु विश्वैः शिखी ।
प्रोक्तोऽसौ यमदण्ड एव मुनिभिस्त्रिंशा महाभैरवो
ह्यष्टौ शङ्करनिर्म्मिताश्च समरे देवासुरे भैरवे ॥

यन्त्रे चाष्टकरेऽष्टहस्तफणिनीसूर्य्याङ्गुला विस्तरे
स्तम्भा मर्कटिका च पञ्चरमतः षट्त्रिंशद्धस्ता क्रमात् ।
यष्टा पृष्ठविभागतोऽपि रदनैस्तुल्योऽष्टमात्राङ्गुलैः
प्रोक्ता कुण्डलवज्रको च वहितो मध्यादशीत्यङ्गुलैः ॥

यष्टा दृढां मर्कटिकां विदध्या-
ल्लोहस्य कीलेन च चर्म्मणापि ।
यन्त्रं प्रकुर्य्याद्दृढकाष्ठकश्च
तस्माग्नया ज्योतिकया समेतम् ॥
कराङ्गुलैः पञ्चरकस्य दैर्घं
केषां मतं हस्तमिते च यन्त्रे ।
याटी कुली वह्निजलानिलाख्या-
स्ते लक्षणैः परिकल्पनीयाः ॥”

इति यन्त्राष्टकप्रमाणानि ॥ * ॥

“नीराश्रयं पुण्यवतां विधेयं
मध्ये पुरस्यापि तथैव बाह्ये ।
वाप्यश्चतस्रोऽपि तथैव कूपा-
श्चत्वारि कुण्डानि च षट् तडागाः ॥*॥

कूपाः श्रीमुखवैजयौ च तदनु प्रान्तस्तथा दुन्दुभि-
स्तस्मादेव मनोहरश्च परतः प्रोक्तस्तु चूडामणिः ।
दिग्भद्रो जयनन्दशङ्करमतो वेदादिहस्तैर्मिता
विश्वान्तैः क्रमवर्द्धितैश्च कथिता वेदादयः कूपिका ॥*॥

वापी च नन्देकमुखा त्रिकूटा
षट्कूटिका युग्ममुखा च भद्रा ।



जया त्रिवक्त्रा नवकूटयुक्ता-
स्त्वर्कैस्तु कूटैर्विजया मता सा ॥*॥
सरोऽथ चन्द्रश्च महासरश्च
वृत्तं चतुष्कोणकमेव भद्रम् ।
भद्रैः सुभद्रं परिघैकयुग्मं
वकस्थलेकद्वयमेव यस्मिन् ॥
ज्येष्ठं मितं दण्डसहस्रकैस्तु
मध्यं तदर्द्धेन ततः कनिष्ठम् ।
ज्येष्ठं करैः पञ्चशतानि दैर्घ्यं-
स्तदर्द्धमध्यं तु ततः कनिष्ठम् ॥*॥
भद्राख्यकुण्डं चतुरस्रकञ्च
सुभद्रकं भद्रयुतं द्वितीयम् ।
नन्दाख्यकं स्यात् प्रतिभद्रयुक्तं
मध्ये सुभद्रं परिघं चतुर्थम् ॥
कराष्टतो हस्तशतं प्रमाणं
द्वारैश्चतुर्भिः सहितानि कुर्य्यात्
मध्ये गवाक्षस्य दिशो विभागे
कोणे चतुष्काष्वपि यज्ञशाला ॥*॥

गङ्गाद्या रवयो हरेश्च दशकं रुद्रा दशैकाधिका
दुर्गा भैरवमातृका गणपतिर्वह्नेर्म्मिकं चण्डिका ।
दुर्व्वासा मुनिनारदस्तु सकला द्वारावती लौलिका
लोकाः पञ्च पितामहादिविबुधा स्युर्मध्यभित्तौ सदा ॥

तस्योर्द्ध्वतः श्रीधरमाण्डकस्य
संदर्शनात पूर्व्वफलश्च काश्याः ।
स्नानाश्च गङ्गाप्रवनस्य पुण्य
ह्वतं भवेच्चेद्विधिवद्विधिज्ञैः ॥
विधारितं जीवनमेव येन
तद्दोषदेकेन समं पृथिव्याम् ।
स षष्टिसंख्यं च सहस्रवर्षं
स्वर्लोकसौख्यान्यखिलानि भुङ्क्ते ॥

ग्रामे वाथ पुरे नरेन्द्रभवनं ततषोडशांशं भवेत
मध्यात् पश्चिमदिक्समाश्रितमिदं दुर्गं भवेच्चाथ भ्रात ।
द्वारं दक्षिणवामतश्च पुरतः कार्य्यालय-स्थलरा,
सर्व्वं वास्तुगृहादिवासरचना भूपेच्छया कारयेत ॥’

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे प्राकारयन्त्रवापीकूपतडागलक्षणम् ४ अध्यायः ॥ * ॥

“अथो नृपाणां भवनानि वक्ष्ये
विक्रातपत्रावनिपालकस्य ।
शतश्च हस्ताष्टसमन्वितश्च
व्यासे गृहं चोत्तममेव तस्य ॥
ये द्वापरे भूमिभुजो बभूवु-
स्तेषां गृहं हस्तशतं द्विहीनम् ।
तस्मात् प्रभूमीश्वरको नृनाथ-
स्तस्याधिकाशीतिकरं गृहं स्यात् ॥
यामैकलक्षद्वयमस्ति यस्य
प्रोक्तो महासमण्डलिको नरेशः ।

अशीतिहस्तं दिकरेण हीनं
कुर्य्याद्गृहं शोभनमेव तस्य ॥
पञ्चायुतेशो नृपमण्डलीको
भवेद्गृहं तस्य कराष्टषष्टिः ।
सामन्तमुख्यो ह्ययुताधिपोऽसौ
तद्गेहमष्टेषु करप्रमाणम् ॥
तदेषु पञ्चाशदपि द्विहीनं
सामन्तसंज्ञोऽयुतनाथ एव ।
तथा ततीयोऽपि ततो द्विहीनं
त्रिंशत्कराष्टाधिकमेव गेहम् ॥
प्रोक्तः प्रवीणैश्चतुराशिकोऽसौ
ग्रामा हि यस्यैव सहस्रमेकम् ।
अष्टाधिकं विंशतिहस्तहर्म्यं
मिष्टं समस्तानि यथोदितानि ॥
ग्रामाधिपा ये तु शताधिपाश्च
ते स्वल्पराष्ट्रा अपि सैनिकाश्च ।
तेषां गृहा अष्टदशाधिकैश्च
करैः समाना मुनिभिर्म्मताश्च ॥
भूपालकार्द्धेन च मन्त्रिगेहं
यथाधिकारेण भवन्ति हीनम् ।
व्यासाद्दशांशाधिकमेव दैर्घ्यं
कुर्य्याद्यो पञ्चमभागमिष्टम् ॥
गृहं चतुर्हस्तमितं करादि-
वृद्ध्या द्विरामान्तमिति प्रमाणम् ।
तत, परं भूपतिमन्दिराणि
यावच्छतं चाष्टकरादियुक्तम् ॥
स्याद्भूमिरेका वसुहस्तगेहे
दशाभिवृद्ध्या द्वितया पुनश्च ।
प्रासाद एवामरभूपयोश्च
हर्म्म्याणि लोके मुनिनोदितानि॥
शालाया नवधा च पञ्चकरतो मानश्च विश्वा-
न्तकं
भित्तेरेव चतुर्दशाङ्गुलमितिर्यावत् सपाद करम् ।
आगारस्य तु षोड़शांशरहितोऽप्यर्द्धेन हीनो-
ऽथवा
भित्तेर्मानमिद त्रिधा विरचितं कल्प्यं यथा-
योगत: ॥
दैर्घ्ये चन्द्रकलाङ्गुलोत्तमशिला मध्याङ्गुलो
नान्तिमा
व्यासे दिङ्नवभूश्रदुच्छ्रितिरपि त्रिंशेन विस्ता
रत: ।
हस्तादेस्त्रिकरोदयं नवविधं पीठं गृहे सर्व्वतो
विप्रादे रसभूतवदगुणकाः स्युःपीठके मेखलाः॥
षष्ठ्या वाथ शतार्द्धसप्ततियुतैर्व्यासस्य हस्ता-
ङ्गुले-
द्वारस्योदयको भवेच्च भवने मध्यः कनिष्ठोत्तमै. ।
दैर्घ्यार्द्धेन तु विस्तरः शशिकलाभागोऽधिकः
सप्तते-
दैर्घ्यं त्र्यंशविहानमङ्करहितं मध्यं कनिष्ठं
क्रमात् ॥
ज्येष्ठा प्रतोली तिथिहस्तसंख्या
प्रोक्तोदयं विश्वकरा च मध्या ।

शिल्पशा

कनि.ष्ठका रुद्रकरा क्रमेण
व्यासेऽष्ट सप्तैव च नागसंख्या ॥
वेदास्यासकलांशकैर्युगगुणैर्हस्तैस्त्रिबाह्वैर्यतै-
र्हर्म्म्यास्य त्रिविधोदयः क्षितितलादूयाच्च पञ्चो-
र्द्धकम् ।
एकैकोऽपि पुनस्त्रिधा निगदितः सर्व्वे त एका-
दश
चैषाः व्यसवतो नखाः शशिकला अष्टादशाद्य-
स्त्रिधा ॥
त्रिस्थाने युगपर्व्वताष्टस्तितियुता धिष्ट्यक
विशान्विता
मध्योऽयं त्रिकरैस्तदंशसहितैः प्रोक्तः कनिष्ठ-
स्त्रिधा । * ।
वृक्षं दुग्धविशुष्ककण्टकयुतं नीडैस्तु चैत्यद्रुमं
चीर मारुतपातितश्च भवने त्विच्चाविभीतं
त्यजेत् ॥
शाकः शालमधूकसर्ज्जखदिरा रक्तासना
शोभना ।
एकोऽसौ सरलोऽर्ज्जुनश्च पनसः श्रीपर्णिनी
शिंशपा ।
हारिद्रः पिचुमर्द्दचन्दनतरुः पद्माख्यकस्तिन्दुकौ
नैतेऽन्येन युता भवन्ति फलदाः शाकादयः
शोभनाः ॥*॥
गेहोदयन्तु नवधा विभजेत षडंशं
स्तम्भोर्द्धभागसमकं भरणं शिरश्च ।
कुम्भी त्वुदम्बरसमैकविभागतुल्या
पट्टश्च तस्निकयुतोऽंशसमान एव ॥
शालालीन्द उदाहृतो हि विबुधैर्वाणेषु युग्मां-
शकः
सप्तांशेषु गुणैश्च नन्दपदनो वेदांशतुल्यास्तथा ।
कापाट गृहदक्षिणे निगदितं वामे भवेदर्गला
स्तष्ट्या निष्क्रमणं क्षतं मुनिवरैर्द्वारेषु सर्व्वेषु यत् ॥
शालाजिर्णाणैर्मनुरेव मध्ये
चयो ह्रयान्ते द्वयमस्य पार्श्वे ।
द्वारोत्तमाङ्गेन समानकर्णाः
शस्ता न शस्ता भवनाभिवक्राः ॥*॥
दीपालयो दक्षिणदिग्विभागे
सदा विधेयोऽर्गलया समानः ।
वामे च मध्ये न शुभाय गेहे
सुरालये वामदिशोऽस्ति वृद्धि ॥
दाराग्रे खटकीमुखे च तदधो द्वाः षोडशां-
शाधिकं
सर्व्वं वा शुभमिच्छता च सतत कार्य्यन्तु
पट्टादधः ।
तन्न्यूनं न शुभन्तुलातलगतं कुच्चौ तथा पृष्ठगं
काष्ठं पञ्चक एव नीतरहितं यन्मूलपूर्व्वोत्तरम् ॥
द्वारोर्द्धं यद्वारमस्य प्रमाणं
संकीर्णं वा शोभनं नाधिकं तत् ।
कुम्भद्वाराण्येव यानि पृथूनि
तेषां शीर्षाण्येकसूत्राणि कुर्य्यात् ॥
सर्व्वं द्वारं नीचमानं रुजायै
यद्वा ह्रस्वं तत् करोत्यर्थनाशम् ।

शिल्पशा

गेहाद्यं यत्न पूर्व्ववास्तुस्वरूपं
तेषां भङ्गान्नैव सौख्यं कदाचित् ॥
द्वारव्यासदशांशतोऽधिकमिदं कार्य्यं गृहं दक्षिणे
तुल्यं हस्तिगृहञ्च वाजिभवनं तेनाधिकं
वामनः ।
अर्थाशेऽथ नवांशके च वितथे तोये जयेन्द्रे
स्थितं
द्वारं सौम्यगृहक्षते च कुसुमे भल्लाटके शस्यते
प्राग्द्वाराष्टकमध्यतोऽपि न शुभं सूर्य्यशु-
पर्जन्यतो
याम्यायाञ्च यमाग्निपौष्णमपरे शेषासुरं
पापकम् ।
सौम्यायामथ रोगनागगिरिजं त्वाप्य तथाप्य-
शुभ
केचिद्द्वारगवासौम्यकं न धि स्थितं प्रोक्तञ्च
वातायने ॥
द्वारं विद्धमशोभनञ्च तरुणाकोणाश्मसस्तम्भकैः
कूपेनापि च मार्गदेवभवनैर्विद्धं तथा कीलकैः ।
उच्छ्रायाद्द्विगुणां विहाय पृथिवीं वेधो न
भित्त्यन्तरे
प्राकारान्तरराजमार्गपरतो वेधो न कोणहरे ॥
दैर्घ्यं साईशताङ्गुलञ्च दशभिर्हीनम् १४०।१३०।
१२०।१०० चतुर्धा विधिः
प्रोक्तं वाथ शतं त्वशीतिसहितं १८० शुभं २००
नवत्या शतम् १६० ।
तद्वत् षोडशभिः शतञ्च ११६ नवभिर्युतं नथा-
शीतिकम् ८८
द्वारं मत्स्यमतानुसारि दशकं योग्यं विधेयं
बुधै. ॥*॥
स्वयमपि च कपाटोद्घाटनं वा पिधानं
भयदमधिकहीनं शाखयोर्व्वा विचाले ।
पुरुषयुवतिनाशस्तम्भशाखाविहीनं
भयदमखिलकाष्ठाग्रं यदाध.स्थितं स्यात् ॥
देवालय वा भवनं मठञ्च
भागो. करैर्व्वायुभिरत्र भिन्नम् ।
तन्मूलभूमौ परिवर्जनीया
छाया गता यस्य गृहस्य कल्पे ॥
नैको लघुर्व्वामदिशाविभागे
मध्ये द्विषट् दारुणवर्णगेहे ।
स्तम्भासनं हीनमपि क्षयाय
यदाधिकं रोगकरं तदा स्यात् ॥
स्तम्भोऽष्टासमुष्टकभद्रसहितो रूपेण चालङ्कृतो
युक्तः पल्लवकैस्तथाभरणकं यत् पल्लवेनावृतम् ।
कुम्भो भद्रयुता कुमारसहितं शीर्षं तथा
किन्नरा:
पत्रश्चेति गृहे न शोभनमिदं प्रासादके शस्यते ।
स्तम्भो द्वयोर्मध्यगतो न शस्तो
शुभकरो पट्टयुगाग्रतोर्द्धौ ।
गृहे प्रशस्ताश्चतुरस्त्रकाष्ठे
स्तम्भा न कन्दैन विना प्रशस्ताः ॥
हानिस्तुलामध्यगता खनस्य
स्तम्भदन्तालयभित्तिमूलम् ।

संलग्नचत्वार्य्यपि चानये स्युः
स्तम्भासन स्तम्भशिरश्च शीर्षम् ॥
उत्सेधार्द्धविनिर्गतं शरयुगांशेनाधिकं शस्यते
छाद्यं पट्टसमानकं सुखकर नाशाय निम्नोन्नतम् ।
तत काकस्य च पक्षवच्च कुमुदाभं सूर्य्यकालायकं
शालम्बञ्च करालकञ्च विबुधैः प्रोक्तञ्च तत् षड्विधम् ॥
भूम्यारोहणमर्द्धतस्तदुपरि प्राग्दक्षिणं शस्यते
द्वारं तुङ्गभवञ्च भूमिरपरा स्त्वाकंभागैः क्रमात् ।
प्रासादे च मठे नरेन्द्रभवने शैलः शुभो नो गृहे
तस्मिन् भित्तिषु वालुकास्तु शुभदाः प्राग्भूमिकुम्भा तथा ॥*॥

पृष्ठे चगानन्तरमेव वात्यात्
गृहप्रवेशो न शुभङ्करोऽसौ ।
गृहस्य पृष्ठे यदि राजमार्ग-
स्तदादिभूमेर्न हि पृष्ठमौख्यम् ।
जीर्णं गेहं भित्तिमग्नं विशीर्णं
तत् पातयं स्वर्णनागस्य दन्तैः ।
गोश्टङ्गैर्व्वा शिल्पिना निश्चयेन
पूजां कृत्वा वास्तुदोषो न तस्य ॥

हर्म्यास्यापि समन्ततो गृहपतिर्द्विं यदा-पीडते
मत्वाशासु त्रिवर्द्धितञ्च फलदं दुष्टं तदेकञ्च च ।
प्राच्यैरपि वैरमुत्तरदिशाभागे मनस्तापकृत्
पश्चादर्थविनाशदक्षिणदिशि शत्रोर्भय वर्द्धते ॥
वामाङ्गे धनवल्लदेवभवनं धातुः श्रियो वाजिनो
नार्य्यस्त्रौषधिभोजनस्य भवनं स्याद्वाटिका वामतः ।
वङ्गौजलदन्तिशस्त्रसदनं स्त्रीणां तथा दक्षिणे
स्थानं माहिषमाजमौर्णिकमिदं याम्याग्निमध्ये शुभम् ॥
सुग्रीवे वरुणेऽसुरे गणवरे स्याद्गोटकाना गृहं
दाक्षे शुद्धगृहञ्च नृत्यरमणं गान्धर्व्ववेदाश्रितम् ।
राज्ञो माल्यगृहं गजेन्द्रजयके रुद्रे महिष्या गृहं
सत्ये धर्म्मगृहं रवौ व्ययगृहं प्रोक्तं जये गोगृहम् ॥

दशप्राच्योरन्तरे गर्भभाना-
मुष्ट्राणां वा स्थानमेवात्र कार्य्यम् ।
धान्यागारं स्यात्तथा प्राणकोणे
भङ्गेऽप्येव शम्भुकोणे शिवार्च्चा ॥
प्राक्पश्चिमे मारुतवह्निकोणे
प्रोक्ता प्रवीणैरपि नृत्यशाला ।
वर्च्चोगृहं रात्रिचरस्य कोणे
स्यात् पश्चिमे भोजनशालिका च ॥*॥

प्राक शोभा नृपमन्दिरे च पुरतः स्थानं तथा पुस्तकं
वामाङ्गे नृपतेस्तथायुधधराः कुर्य्यातपन्नाणि च ।
कूर्च्चं चामरतापसाः खगुरवस्ताम्बूलछत्रादक्षिणे
गेहाधीशयदृच्छया च शयनं सर्व्वासु भूमीषु च ॥

विवस्वदाख्ये शयनं प्रशस्तं
वादित्रगेहं सवितुर्व्विधेयम् ।
पूषाश्रितं भोजनमन्दिरञ्च
महानसं वह्निदिशाविभागे ॥
माहेन्द्राख्ये गोपुर द्वित्रिभूमिं
भागैः संख्या तस्य मध्ये विधेया ।
उक्तानुक्तं मन्दिरादौ निवेशे
त्यक्त्वा कार्य्यं चाज्ञया भूपतीनाम् ॥
दिक्शालान्तं त्र्येकशालादिगेहं
ज्येष्ठा मध्या कन्यसा दक्षिणाङ्गात् ।
शाला कार्य्या लोकगेहे शुभाप्त्यात्
त्रिद्व्येका' स्युर्भूमयस्तेषु नूनम् ॥”

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे राजगृहनिवेशादिलक्षणं ५ अः ॥*॥

“अथैकशालं द्विगुणाद्विशालं
प्रस्तारतो लक्षणमेव तेषाम् ।
यथोदितं वास्तुमते तथैव
ब्रवीमि राज्ञामथ मानवानाम् ॥
चत्वारो गुरवस्तु पूर्व्वगुरुतोऽधो ह्रस्वतोऽन्ये समाः
भूय' पश्चिमपूरितञ्च गुरुभिर्याबल्लघुत्वं भवेत् ।
उद्दिष्टे द्विगुणाङ्ककैर्लघुभवैः सव्यैकमिश्रीकृते
नष्टे स्तो विषमे समे गुरुलघू रूपे तदर्द्धीकृत. ॥
स्थाने लघो. सन्मुखादलिन्दं
प्रदक्षिणं तं क्रमतो विदध्यात ।
प्रस्तारत. षोडशकं गृहाणां
प्रोक्तं तथाख्यां कथयामि तेषाम् ॥*॥
ध्रुवञ्च धान्यं जयनन्दसंज्ञे
खराख्यकान्तञ्च मनोरमाख्यम् ।
सुवक्त्रमस्मात् किल दुर्मुखाख्यं
क्रूरं विपक्षं धनदं क्षयञ्च ॥
आक्रन्दकं वैपुलवैजयञ्च
फलानि नाम्ना सदृशानि तेषाम् ।
इति ध्रुवादिषोडशगृहाणि ॥ * ॥
धान्यादितोऽष्टौ विजयान्तकं हि
त्वलिन्दयुग्मं मुखतो विदध्यात ॥
रम्यं श्रीधरमोदिते च परतस्तद्वर्द्धमानं गृहं
कारालञ्च सुनाभमेव तदनु धाङ्क्षं समृद्धं तथा ।
इति रम्याष्टकम् ॥ * ॥
सर्व्वाणि ध्रुववद्भवन्ति नियतं षड्दारुकैः सुन्दरं
प्रोक्तं नन्दरदञ्च भद्रकुमुदेऽथो वैसुखाख्य शिवम् ॥
तत्सर्व्वलाभञ्च विशालसंज्ञं
तथा विलक्ष्यं त्वशुभं ध्वजञ्च ।
उद्योतमेव त्वथ भौषणञ्च
सौम्याजिते स्तः कुलनन्दनञ्च ॥”
इति सुन्दरादिषोडशगृहाणि ॥ * ॥
“पूर्व्वालिन्दसमस्तकेषु युगलं पट्टस्य शालान्तरं
हंसश्चैव सुलक्षणञ्च परतः सौम्य ह्यं भावुकम् ।
तस्मादुत्तमरौचिरे च सततं क्षेमं तथा दीपकं
चोदृतं वृषसुस्थितञ्च थयमानन्दं सुनन्दं क्रमात ॥”
इति हंसादिषोडशगृहाणि ॥ * ॥
“मध्येऽपवर्गं ध्रुवरूपकाणा-
मलङ्कृताङ्कं प्रथमञ्च तत्र ।
तथाप्यलङ्कारमिति क्रमेण
ख्यातं तदन्यं रमणञ्च पूर्व्वम् ॥
तत्रेश्वरं तदनु पुण्यमतः सुगर्भं
प्रोक्तं गृह कलसदुर्गतमेव रिक्तम् ।
स्यादीप्सितं तदनु भद्रकवर्च्चिते च
दीनं गृहं विभवकामदमेव संख्या ॥”
इत्यलङ्कृतादिषोडशगृहाणि ॥ * ।
“षड्दारु सर्व्वेष्वपवर्गकेषु
प्रभावसंज्ञं त्वथ भावितञ्च ।
रुक्मं तथान्यत्तिलकञ्च तत्र
सत् क्रीडनं सौख्यमतो यशोदम् ॥
कुमुदमपि च कालं भासुरं भूषणञ्च
वसुधरमथ गेहं धान्यनाशं तदन्यत ।
कुपितमपि च वित्तं दृद्विदं प्रोक्तमेत-
त्तदनु कुलसमृद्धं षोडशं प्रोक्तमाद्यौ ॥”
इति प्रभवादिषोडशगृहाणि ।
“सर्व्वे सुखालिन्दसमन्विताश्च
दारुद्विषट्कं त्वपवर्गमध्ये ।
ततश्च चूडामणिकं प्रभद्र
क्षेमं तथा शेषसमुच्छ्रितञ्च ॥
विशालसत्त्व त्वथ भूतिदञ्च
हृष्टं विरोधं कथित क्रमेण ।
तत्कालपाशं हि निरामयन्तु
सुशालरौद्रं मुनिसम्मताश्च ॥
वेद्य गृहं चैव मनोरमञ्च
सुभद्रसंज्ञा कथिता च संख्या ।
इत्येकशालानि गृहाणि विन्द्या-
च्छ्रतञ्च चत्वार्य्यधिकं ध्रुवादि ॥
अपवरकं यत् कथित तद्वामे धीमता गृहे कार्य्यम् ।
यत् षड्दारुकमुदितं ज्ञेया सा पट्टजा श्रेणी ।”
इति चूडामण्यादिषोडशगृहाणि । इति चतुरुत्तरं शतमेकशालगृहाणि ॥ * ॥
“अथ द्विशालालयलक्षणानि
पदैस्त्रिभिः कोष्ठकरन्ध्रसंख्या ।
तन्मध्यकोष्ठ परिहृत्य युग्मं
शालास्ततस्तो हि भवन्ति दिक्षु ॥
याम्याग्निगा च करिणी भनदाभिवक्त्रा
पूर्व्वानना च महिषी पितृवारुणस्था ।
गावौ यमाभिवदनापि च रोगसौम्ये
च्छागी महेन्द्रशिवयोर्व्वरुणाभिवक्त्रा ॥
हस्तिन्या महिषी द्विशालभवनं सिद्धार्थकं तच्छुभं
गावौ माहिषसंज्ञकं क्षतिकरं तद्याममृत्यं भवेत् ।
दण्डं छागगवान्वितं धनहरं हस्तिन्यजाभ्यां तथा

काष्ठं गोकर्णिणीयुतं न हि शुभं चुल्ली च पूर्व्वापरम् ।

सामान्यतः सन्ततशान्तिदञ्च
स्याद्वर्द्धमानं त्वथ कुक्कुटाख्यम् ।
इत्यादितो नाम चतुष्टयञ्च
हर्म्येऽ द्विशालं प्रथमं तथैव ॥
यत् स्वस्तिकं नन्दमदारुमध्ये-
ऽलिन्दस्तथाग्रे कथितं द्विशालम् ।
हंसाख्यकं स्यादथ वर्द्धमानं
कीर्त्तिविनाशं भवनं चतुर्थम् ॥
अलिन्दयुग्मं पुरतो विदध्यात्
षड्दारु मध्येऽपि च शान्तसंज्ञम् ।
तस्माद्गृहे हर्षणवैपुले च
तथा चतुर्थं कथितं करालम् ॥
तस्मिन् गृहे दक्षिणतो ह्यलिन्दे
विशच्च चित्तं धनकालदण्डे ।
वामे पुनर्बन्धुदपुत्त्रदं स्यात्
सर्व्वन्तु तस्मिन्नपि कालचक्रम ॥
लघुश्च पश्चात् पुरतोऽपि युग्मं
स्याद्दक्षिणैको रसदारुमध्ये ।
तस्मैपुरं सुन्दरमेव नीलं
स्यात् कौटिलञ्चैव यथा क्रमेण ॥
प्रदक्षिणैकः पुरतोऽपि युग्मं
षट्कं गृहान्तः किल शाम्यदाख्यम् ।
ततो द्वितीयं खलु शाक्तदं स्या-
च्छीलं तथा कोटरमेव संज्ञम् ॥
सौम्यं गृहं मण्डपसंयुतञ्च
तत्तुल्यरूप विबुधैर्व्विधेयम् ।
सुभद्रमस्मादपि वर्द्धमानं
क्रूरञ्च सर्व्वेष्वशुभं चतुर्थम् ॥
मुखे चयं दक्षिणपार्श्वमेकः
षड्दारुकं श्रीधरनामधेयम् ।
प्रोक्ते गृहे कामदपुष्टिदे च
चतुर्थकं कीर्त्तिविनाशमेव ॥
वामे तथा दक्षिणपश्चिमैको
युग्मं मुखे मण्डपमग्रतश्च ।
श्रीभूषणं श्रीवसनं ततश्च
श्रीशोभकीर्त्तिक्षयमेव तद्वत् ॥
एकोऽपरे दक्षिणवामतश्च
मध्यगं श्रीधरयुग्मपूर्व्वम् ।
सर्व्वार्थदं स्यान्मुखतश्चयश्चेत्
लक्ष्मीनिवासं कुपितञ्च नाम्ना ।
युग्मं मुखे मण्डपमेव चाग्रे
युग्म तथा दक्षिणतोऽन्तभित्तिः ।
पृष्ठे तु उद्योतकबाहुतेजः
सुतेज एवं कलहावहं स्यात् ॥
उद्योतकं पश्चिमभागतो द्वौ
कुर्य्यात् द्विशालञ्च वह्निनिवासम् ।
तत् पुष्टिदं कोपसमानमन्य-
मयुक्तषट्कं क्रमतो विधेयम् ॥
लघुश्चिक पूर्व्वदिशाविभागे
एको भवेद्दक्षिणवामपश्चात् ।



महान्तमेतन्महितञ्च दत्त
कुलक्षयं मण्डपसंयुतं स्यात ॥
भ्रमद्वयं दिक्त्रितये विभागे
मुखे त्रिकं मण्डपमग्रतश्च ।
प्रतापवर्द्धन्यमिदञ्च दिव्यं
सुखाधिकं सौख्यहरं चतुर्थम् ॥
तस्यैव रूपं रसदारुयुग्मं
पुनश्चलिन्दोऽजगाजन्ततश्च ।
स्यात् सिंहनादं त्वथ हस्तियानं
श्रेयं तथा कण्टकमेतदन्त्यम् ॥
शान्तादिगेहानि च षोडशैव
द्विशालकानीह यथाक्रमेण ।
नामानि चत्वार्य्यपि रूपमेकं
हस्तादिभेदैः क्रमतो विधेयम् ॥"

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे एकद्विशालगृहलक्षणं ६ अध्यायः ॥*॥

"द्विशालगेहानि तु षोडशैव
वास्तुदधेः सारतरं पुनश्च ।
वक्ष्याम्यलिन्दोऽपि यतो लघुश्च
द्वौ तिन्दुकाख्यौ कथितावलिन्दौ ॥
सूर्य्यं द्विशालं लघुरस्य वामे
मुखे त्रिकं दक्षिणतस्तथैकः ।
मुखे तथा वासवमेव गेहं
वामेऽपसव्ये लघुरेक एव ॥
प्रासादसंज्ञं मुखतस्त्रयश्चेत
प्रदक्षिणं तिन्दुकवेष्टितं स्यात् ।
अलिन्दयुक्तं विमलं द्विशालं
तद्दीर्घवन्तं सह मण्डपेन ॥
अथ द्विशालेषु समस्तकेषु
मध्ये विदध्याद्रसदारु चैकम् ।
तदा भवेद्भासुरमग्रयुग्म-
मेको लघुर्दक्षिणदिग्विभागे ॥
एको लघुर्दक्षिणपूर्व्वगः स्यात्
तदिन्दुभाक्षं मुखमण्डपेन ।
द्वौ पूर्व्वतो दक्षिणतस्तथैको
युग्मं भवेन्मण्डपगं सुतेजः ॥
मुखे गुणा दक्षिणतस्तथैको
द्वौ मण्डपेऽस्मिन् ध्वजाभिधानम् ।
महान्तगेहं सुखदं त्रिके तु
युग्मान्वितं मण्डपमेतदेव ॥
मुखे तथा मण्डपके च युग्मं
वामेऽपसव्ये युगलं लघोश्च ।
लोकत्रयाडम्बरमस्य नाम
महत्तरं शम्भुगणेश्वयोश्च ॥
युग्मं मुखे मण्डपगं द्वयं स्या-
त्तथा द्वयं दक्षिणवामतश्च ।
एको हि पश्चाद्वरदाभिधानं
श्रीविश्वकर्म्मोक्तमताद्द्विशालम् ॥
मालोन्नतं सुखगैश्चतुर्भि-
र्युग्मं भवेद्दक्षिणवामभागे ।
युग्मं तथा पश्चिमदिग्विभागे
तदग्रतो मण्डप एक एव ॥



प्राग्गामा लघवो विलासभवने वामे लघुर्दक्षिणे
तश्चेन्मण्डलसंयुतञ्च कमलं स्याद्वृद्धिदं सौख्यदम् ।
वेदालृदरके मुखे च सततं वामेऽथवा दक्षिणे
तस्याग्रे सुखमण्डपस्य फलदानेवं गृहान् षोडश ॥"

इति सूर्य्यादिषोडशगृहाणि ॥*॥

"अथ त्रिशालं त्रिदशैश्चयैकं
स्यान्नैदशावासमरूपसंज्ञम् ।
तथा चतुर्थं कुमुदाभिधानं
हस्तादिभेदैः क्रमतो विधेयम् ॥
छत्रं ह्यलिन्दश्च तथैव पुत्रं
हरञ्च कामस्त्वथ वृषभद्रम् ।
षट्कञ्च मध्ये स्वधनं कुबेरं
पञ्च तथा कामदमेतदेव ॥
अलिन्दयुग्मं त्वथ भद्रयुक्तं
मध्ये कपाटं जलजाभिधानम् ।
स्यान्मिधजं चैव गजं क्रमञ्च
षड्दारु मध्ये सकले यथातः ॥
स्याद्वैजयं मण्डपवृषभद्रं
जयं निनादं त्वथ कीर्त्तिभञ्च ।
भद्रोनवृक्षाधिकवाकलाङ्गं
निर्लोभकं वासदकौशले च ॥
चैत्रकं क्रमादीश्वरवारदाख्यं
भौमञ्च कौशल्यमतः क्रमेण ।
तद्देद बुद्धस्खलनं तृतीयं
स्यात् कौशलं गौलमिदं चतुथम् ॥
मुखगुणलघुर्वामे दक्षिणे चैक एत-
द्दरदशरदमुक्तं दण्डकं काकपक्षम् ।
इदमिह हि निनाम्नं सर्व्वनाधिकं स्या-
त्सदनु च गजनादं बाहुलं कीर्त्तिदाक्रम् ॥
इत्यादिरूपमुखमण्डपमेव सिंहं
श्रेये गृहे वृषगजे अपि कोशसंज्ञम् ।
वामेऽधिकञ्च लघुना कथितं सुभद्र
स्यान्मालिभद्रमपि रत्नकाञ्चनाख्ये ॥
युगमुखमपरैको भैरवं दक्षिणे च
भरत नरजमेतत् स्याच्चतुर्थं कुबेरम् ।
पुनरपि लघु वामे हस्तियानं वियान
ध्वजकूपजगेहं तच्चतुर्थं क्रमेण ॥
वर्णाग्नी शुभदञ्च सागरगृहं पञ्चैव कृत्वा मुखे
प्रोक्तं चौरदरत्नदाक्रयमिदं कोलाहलञ्चापरम् ।
षड्दारुद्वयभद्रवज्रलघववस्तिर्य्यक् युतं शालया
गान्धर्व्वं क्षितिभूषणञ्च कथितं सर्व्वाङ्गकं दर्पकम् ॥
धान्यं वृद्धिकरं त्रिशालमुदितं शालां विना पावनी
प्राक्शाला रहितं शुभं निगदितं सुक्षेत्रमर्थप्रदम् ।
चुल्लीसंज्ञमिदं करोति मरणं हीनं तथा याम्यया
पश्चान्नं महिषीञ्च ते च भवनं तत्पुत्रबन्धुक्षयम् ॥"

इति त्रिदशादिषोडशगृहाणि ॥*॥

"त्रैशालानि च षोडश प्रथमतः सौमच्च च्छ-
दारकं
तच्चैतेन पुरोऽपि शङ्करमिदं मध्ये क्रमात्
पूर्व्ववत्।
कद्रे द्वौ सुखतोऽपि दक्षिणलघुस्त्वेकाधिकं
सागरं
चत्वारो नृपशोभितश्च पुरतः प्राग्दक्षिणौ को
लघुः॥
पश्चाये सकलं भ्रमश्च लघुना सर्व्वस्य तत्
सौख्यदं
दागाख्यं भ्रमसंयुतश्च भवनं तत् सर्व्वशालं
भवेत्।
शाखाशाकुलनन्दनं क्रमनया त्वेकद्वयेकान्वितं
तस्मिन्दक्षिणसंयुते च लघुके कल्याणसंज्ञं तथा॥
सर्व्वाशासु लघुत्रयं शरसुखं तत् पट्टयुग्मं
क्रमात्
तत्सौभाग्यविवर्द्धनश्च भवनं राज्ञां सदा निर्म्मि-
तम्।
आनन्दं सुखराजिदक्षिणलघुर्वामे च पृष्ठे द्वय
दागाख्यं जनशोभनं गुणगणैर्कैकान्वितं स्थित.॥
स्याच्छ्रीवर्द्धनमग्रतो रसयुतं युग्मामिनैः क्रमात्
श्माग्रे त्रिगुणं त्रिकश्च सबवो लोकत्रिकं
सुन्दरम्।
गेहं श्रीतिलकं च भद्रसहितं हस्तेन हीनं सुखे
तद्युक्तं ललना च भद्रसहितं विष्णुप्रियं
भूपतेः॥"

इति सौमादिषोडशगृहाणि ॥*॥

"षड्दारकं श्रीत्रिदशं त्रिशालं
तत् श्रीनिवासं सुखहस्तयुक्तम्।
श्रीवत्सत, श्रीधरमेव दृष्ट्वा
श्रीभूषणं वेदसुखश्च गेहम्॥
दाणे श्रीजयमग्रतोऽपि ऋतुभि. श्रीतेलिकं
मन्दिरं
दागाग्र रसदारुयुग्मसहितं तत् श्रीविलास
भवेत्।
श्रीतेजोजयमग्रतश्च मुनिभिः षडदारु युग्मान्वित
सौमादित्रिदशादिभूपतिगृहाः पञ्चाधिका
विंशतिः॥"

इति त्रिदशादिभवनानि ॥*॥

"भवननवकमुक्तं यच्चतुःशालमध्यात्
नयनलघुमुख स्याद्दक्षिणेकेन चन्द्रम्।
भवति सदनमध्ये सर्व्वतो दारुषट्कं
द्वितयमपि च तेषामन्तिमं युग्मयुक्तम्॥
मलयमथ च गेहं वामहस्ताधिकं स्यात्
भवति च गुणहस्तं शोभनं पूर्व्वतोऽपि।
त्रिभिरपि च सुकर्णा पृष्ठयाम्ये तथैक-
स्तदधिकमपि वामे वैश्म नागेन्द्रसंज्ञम्॥
चक्रं चतुष्टयसुखं सकलेषु शस्तं
याम्योत्तरे हि लघुनापि जयावहं स्यात्।
भद्राकयच्च मकराक्षयमेव तस्मिन्
पृष्ठाग्रहस्तमपि कामदमग्रभद्रम्॥"

इति विजयादिनवचतुःशालगृहाणि ॥*॥

"शुक्लादयो मुनिमतेऽष्टविधा च शाला-
स्तासां षडेव कथिता भवनप्रसङ्गे।
शालालिमध्यरचितोऽपि लघुः सुखाय
यदा तदग्ररचिताः पृथगेव शाला॥"

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राज-
वल्लभे द्विशालत्रिशालचतुःशालगृहलक्षणवर्णनं
सप्तमोऽध्यायः॥ * ॥

"शयनमथ नृपाणां लङ्गुलानां शतैकं
नवतिरपि सुतानां मन्त्रिणः षड्विहीनम्।
बलपतिगुणहस्तं त्र्यङ्गुलोन गुरोश्च
तदनु युगलहीनं ब्राह्मणादेः प्रशस्तम्॥
व्यासोर्द्धभागे नतदैर्घ्यतश्च
कलांशमानोऽधिक एव शस्तः।
त्र्यंशेन पादेन समुच्छ्रयः स्यात्
द्वित्र्यङ्गुलानामधिको न कार्य्यः॥
श्रीपर्णी धनदासनोऽपि सदसा विजप्रदा तिन्दुकी
वृद्धिः शिंशपयाथ शाकशयने शर्म्मापि शालैः
क्षते।
आयुः पद्मकजे च चन्दनमये शत्रुक्षयः स्यात्
सुखं
श्रेष्ठं चैकमलं शिरीषजनितं पर्य्यङ्कयाना-
सनम्॥"

इति शयनम् ॥ * ॥

"सिंहासनं चोत्तममङ्गुलानां
षष्ट्या दशोनञ्च परं तथैव।
दशांशवस्त्रशमनो विहीनं
व्यासे च दैर्घ्यार्द्धसमुच्छ्रयः स्यात्॥
मुनिभिरथ शिवैर्वा भद्रभागत्रयं स्या-
दुदय इति विभागैर्भाजिते पीठमष्टौ।
कनकमपि रसांशं सप्तधा ग्रासपट्टी
शिवनवमुनिरत्नैर्दन्तिवाहौ निवेद्यौ॥
छाद्यं स्यादसभागनेव तिथितो भागेन कक्षासनं
युक्तं स्तम्भयुगेन तोरणयुतं रत्नै. शुभे राजि-
तम्।
कर्त्तव्यं नृपवल्लभं मतिमता ज्येष्ठञ्च सिंहासनं
शातयश्च यशोऽभिवर्द्धनमिभैः सिंहैर्नृकक्षा-
सनम्॥
करैस्तु वेदी पुनरेव छाद्यं
सुखासनं तोरणसंयुतं स्यात्।
पीठञ्च कुम्भः कलसं विटङ्क-
सुराङ्गसंज्ञं सह छाद्यकेन॥
पीठे गोहरिवेदिके च सुयशश्छादेन सिंहासनं
स्तम्भै मात्तकवेदिकासनयुतं तद्दीपचित्रं भवेत्।
छत्रं ज्येष्ठमशीतिवेदसहितं द्वासप्ततिर्मध्यमं
षष्ट्या कन्यसमङ्गुलैर्नरपतेर्दैव शताद्धं शुभम्॥"

इति सिंहासनच्छत्रलक्षणानि ॥ * ॥

"वातायनो लुम्बिकया विहीनो
बुधैरदीर्घस्त्रिपताक एव।
द्विलुम्बिकश्चोभयसंज्ञकश्च
यः स्वस्तिकोऽसौ युगलुम्बियुक्तः॥
स्याद्वादशैः प्रियवक्त्र एव सुमुखः षड्भिः पुन-
श्चेति च
छाद्यैकेन युतः सुवक्त्र उदितो दाभ्यां प्रियङ्गो
भवेत।
एकोनः परिपद्मनाभ उदितस्तद्दीपचित्रो युगं
र्व्वैचित्रः शरपङ्क्तिभिस्तु विविधाकारैर्युत.
पञ्च च॥
सिंहो दैर्घ्यविवर्द्धितो हि पृथुले हंसो गवाक्षो
भवेत
कुम्भोऽसौ मतिदोऽपि भद्रसहितो ज्ञेयस्तु
कुङ्कुणव.।
द्वारेणैव युगाम्बकेण गरुडः पञ्चद्वयं जालक
प्रोक्ताः पञ्चदशैव रूपमदला वेद्यादिकर्णा-
सने.॥"

इति पञ्चदश गवाक्षा. ॥ * ॥

"सभा च नन्दा परतोऽथ भद्रा
जया च पूर्णा क्रमतोऽपि दिव्या।
पश्ची सुरत्नोद्भविकोत्पलाष्टौ
बुधैर्व्विधेयावनिपालगेहे॥
सैन्नं चतुष्टयपदैरपि षोडशांशं
मध्ये तुरीयपदमेकपदो लघुश्च।
नन्देति भद्रसहिता च पदेन भद्रा
तद्वेदतश्च जयदा लघुना च पूर्णा॥
दिव्या सभा केवलनन्दभागा
भद्रैश्चतुर्भि. सहिता च पश्ची।
रत्नोद्भवा स्याद्युगतोऽपि तुल्ये-
स्तथोत्पलाख्या प्रतिभद्रतश्च॥
स्तम्भैस्तोरणराजितैश्च मदला निर्यूहवैतानके-
लूंछाद्यैर्गजसिंहराजविविधैर्नृत्यान्वितैः
शोभितम्।
रत्नस्फाटिकरङ्गभूमिनृपतेः क्रीडासदं मण्डप
कुर्य्याद्दक्षिणभद्रके च रुचिरां यन्मध्यतो वेदि
काम्॥"

इति सभाष्टकम् ॥*॥

"वेदी कोण चतुष्टयेन सकले पार्श्वगते स्वस्तिका
कल्याणं रविकोणकैश्च नृपतेः सा भद्रिका
सर्व्वदा।
कोणे. श्रीधरिका च विंशतिमितैस्त्रिंशोऽम-
राणां गृहे
कोणैरष्टभिरन्विता च शुभदा षड्वार्द्धेने
पद्मिनी॥
विप्रे सप्तकराश्च भूपभवने षट्पञ्च वैश्ये तथा
कुर्य्याद्धस्तचतुष्टयाश्च वृषले चिह्नैकतो हीनके।
तस्योर्द्धे च नरेश्वरासनमतो मण्डं चतुस्तम्भक
हेम्ना मौक्तिकपट्टकूलमणिभिः सौम्याननं
राजितम्॥"

इति वेदिकाचतुष्टयम् ॥*॥

"दीपस्तम्भं त्रिकरमुदये षड भिक्तनं क्रमेण
हस्तान्तं तं विहितमपि ते, पीठकुम्भान्तश्च।
दीपस्योर्द्धे कनककलसं शोभित कङ्कणाद्यैः
कुर्य्याद्वातोरथ तदमतो नागवङ्के विवर्ज्यौ॥"

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभे शयनसिंहासनच्छत्रगवाक्षसभा-
ष्टकवेदिकाचतुष्टयदीपस्तम्भलक्षणं ८ अध्यायः॥

"गृहा वास्तुशास्त्रोदधौ राजयोग्या
अनन्ता हि सन्त्यत्र तेभ्य: कियन्त: ।
मयोक्ताश्च योग्या नृपाणां सन्हेत्र
सशोभान्विताश्चे च कल्याणदाश्च ॥
त्रिशालं गृहं दिक्त्रये हस्तयुग्मं
सुखे वीथिकाग्रे च षड् दारुमध्यम् ।
गुणालिन्दचातुर्द्दिशं चैकवक्त्रं
गवाक्षश्च कोणे च भद्रं विधेयम् ॥
मुखे भद्रके श्रीधरं माण्डयुक्तं
तथा भूमिका पञ्चसप्तैकभूम्याम् ।
विनाच्छादनं मण्डपं वेदवक्त्रे
रिपुघ्नं गृहं राज्यवर्द्धन्यमेनन ॥
मध्ये निम्नमङ्गणाग्रं तथोच्चे.
शस्तं देव पुत्रनाशाय गेहम् ।
स्तम्भश्रेणी मध्यमानेन कार्य्या
न्यूनाधिक्ये नैव पूज्या न च श्री ॥
हीनस्तम्भे शालयोर्व्वाह्यपङ्क्ते
नो वेध: स्यादन्यतो वेध एव ।
भूमेर्न्नेयं रुद्रसंख्याप्रमाणं
तुल्या नेष्टा वर्द्धमाना: शुभा: स्यु: ॥
सार्द्धत्रयेण विभजेत् करतत्त्वसंख्य-
मध्ये नवांशमुदितञ्च कराड्भित्ति: ।
स्तम्भाश्च षोडशशतेऽपि च भद्रकेषु
दन्तैर्मिताश्च सकलासु चतुर्मुखं स्यात् ॥
भद्रे च भूमिद्वयमूर्द्ध्वमाण्ड
मार्द्धत्रिभूमं कथितञ्च गेहम् ।
प्रतापवर्द्धन्यमिदं नृपाणां
लक्ष्मीविलासञ्च वदामि तस्मात् ॥
स्तम्भा दश दश भद्रश्चैकं
षोडशमध्ये तत्समरूपम् .
मदनशरावनिमाण्डसमेतं
लक्ष्मी: कर्म्म करोति च नित्यम् ॥
भागा: पञ्चगुणाश्च पञ्च भवनं षड् विंशता
स्तम्भके,
कुर्य्यं चार्द्धपदे च मन्दपदकैर्भद्रं चतुर्द्वारके: ।
भद्रे वै गुणभद्रकाणि सकलेऽष्टाशीतिका स्तम्भका
माण्ड भूत्रितये च सार्द्धशरभू: स्याच्छ्रीनिवासं
गृहम् ॥
मध्ये स्तम्भशतञ्च भागसमकं भित्तिश्चतुर्द्वारक
मष्टांशाद्विशरांशरामसहितं भद्रं चतुस्त्रिंशता ।
षट्त्रिंशन् द्विशती च ते तु सकला: स्तम्भा:
क्षितौ पूर्व्वतो
नाम्ना तत् कमलोद्भवञ्च कथितं भूम्यर्द्धसप्ता-
न्वितम् ॥
हर्म्यस्योदयकं विभज्य नवधा कुम्भी भवेद्भागत:
पादोनं भरणं शिरश्च कथितं पट्ट: सपादो
भवेत् ।
स्तम्भ: पञ्चपदोनभाग उदित: कोणाष्टपत्त्रस्तथा
भागार्द्धेन जयन्तिका निगदिता सा दन्तकस्यो-
परि ॥
गृहस्योदयंदग्विभागैर्विभाज्यं
द्विभागेन कक्षासनं वेदिका स्यात् ।
त्रिभागेन तत्कण्ठतो निम्नमेवं
गृहस्योदयार्द्धेन पीठं नृपाणाम् ॥
उत्तानपट्टो नृपमन्दिरेऽसौ
हस्ते च हस्ते द्वियवोन्नत: स्यात् ।
पाषाणत: सौख्यकरो नृपाणां
धनक्षयं सोऽपि करोति गेहे ॥
सुघेष्टकै शर्करया विमुक्तै
सकर्करैस्तै: सुदृढा गृहे भू: ।
शस्ता न शस्तं भवनेषु चित्रं
कपोतगृध्रा: कपिकाकरौद्रम् ॥
शुद्धोऽलिन्दविशेषतश्च सकला भूम्यौघरण्डा-
न्विता
छाद्येनाप्यथ मत्तवारणयुतं माण्डं तथार्द्धो-
दयम् ।
मौण्डो भद्रचतुष्किकाभिरुदितो माण्डेन युक्त-
स्तथा
मण्डैस्तुल्यसपादकैस्तु सुकृतो वा शीर्षके:
शेखर: ॥
राज्ञो गृहं छन्दचतुष्टयं स्यात्
तथैव घण्टाकलसेन युक्तम् ।
तुङ्गारसंज्ञस्तथ सिंहकर्ण:
प्रासादके तेऽपि षडेव शस्ता: ॥
षड्जातिगेहं ष्टणपर्णपङ्के-
र्व्वंशै: कडेष्टापि म्दा शिलाभि: ।
छन्नं प्रकारै: कथितञ्च षड्भि-
र्लोकप्रसिद्ध्या च परीक्षणीयम् ॥"
इति राजगृहादि ॥*॥
"वामे भागे दक्षिणे वा नृपाणां
त्रेधा कार्य्या वाटिका क्रीडनार्थम् ।
एकद्वित्रिद्दण्डसंख्या शतं स्यात्-
मध्ये धारामण्डपं तोययन्त्रे. ॥
चैवं सप्तविभागभाजितमतो भद्रञ्च भागत्रयं
तन्मध्ये जलवापिकाजिनपदैरेकांशतो वेदिका ।
स्तम्भैर्द्वादशभिश्च मध्यरचित: कोणेषु कूपान्वित:
कर्त्तव्यो जलयन्त्र एष विधिवत् भोगाय भूमी-
भुजाम् ॥
तस्यां चम्पककुन्दजातिसुमनोवल्ला: सुनि-
र्व्वालुका
जातीहैमसमानकेतकिरपि श्वेता तथा
पाटला ।
नारङ्ग: करणा वसन्तलतिका चारक्तपुष्पादिकं
जम्बीरो वदरी च पूगमधुका जम्बूश्च चूतद्रुमा: ॥
मालूर: कदली च चन्दनवटावश्वत्थपथ्याशिवा-
चिञ्चाशोककदम्बनिम्बतरव: खर्ज्जूरिका
दाडिमी ।
कर्पूरागुरुकिंशुका हयरिपु: पुन्नागको निम्बुको
प्रोक्ता नागलता च बीजनिम्नता स्यात् तिन्दुकी
लाङ्गली ॥
द्राक्षेला शतपत्त्रिका च बकुला धत्तूरकंको-
लकौ
शाकस्तालतमालकौ मुनिवरो-मन्दारपारि-
द्रुमौ ।
अन्ये भोज्यविचित्रखाद्यसुफलास्ते रोपणीया
बुधै:
यद्याप्नोति न भूनवे शुभतरुं लाक्षस्यकान्
वापयेन ।
आस्थानं प्रतिवेचनाय च घटीयन्त्रस्तुषारोद्भवे
दोला स्त्रीजनखेलनाय रुचिरे वर्षावसन्तोन-
मवे ।
बालाप्रौढवधूसुमध्यवनितागानैर्मनोहारिभि-
र्ग्रीष्मे शारदकेऽथ शीतलजलक्रीडा शुभे
मण्डपे ॥
इति वाटिका ॥*॥
"तुरङ्गमाणां गृहवामभागे
शाला चतु:षष्टिकरा विधेया ।
शतार्द्धतो मध्यमिका च दैर्घ्ये
कनीयसी तैर्दशभिर्विहीना ॥
व्यासे च ज्येष्ठा तिथिहस्तमाना
त्रयोदशैकादशकै: क्रमेण ।
तद्वाह्यभित्तिश्च करप्रमाणा
पञ्चार्द्धपञ्चाब्धिकरोदया स्यात् ॥
तेजोहानिमपोहया विदधते पूर्व्वापरास्या
नृणां
ते याम्योत्तरतो सुखादि सततं कीर्त्तिर्यशो
धान्यकम् ।
कर्त्तव्यो धिषणां प्रतीह कलसस्थानं द्विहस्तोदयं
तस्यास्तोरणसुच्छ्रितञ्च तुनिभिर्हस्तै: सुशोभा-
न्वितम ॥
षष्ट्या साधुहयाङ्गुलैर्निगदितो वेदाङ्गुलेनाधिक:
श्रीवत्सस्वस्तिकाव एव च मनोहारी द्विसप्ता-
ङ्गुल: ।
रागाद्यङ्गुलकैस्तु वाजिविजयोऽशीत्या तथा
भैरव:
शान्ताख्यस्तु युगाष्टमात्र उदये मानं हरे:
सप्तधा ।"
इत्यश्वशाला ॥*॥
"सिंहद्वारं पूर्व्वमानेन कार्य्यं
त्रिद्वारका वा मालिका स्तम्भशीर्षे ॥
स्यातां मध्ये तात्त्विकौ रक्षणार्थं
तुल्यौ भागेनाधिकौ वापि सार्द्धौ ॥
भागे दक्षिणवामके च करिणां शाला हरे-
द्वारत:
कर्त्तव्या सुदृढोन्नता च कलसैर्घण्टादिभि-
र्भूषिता ।
संकीर्णो रसनो नगैर्निगदितो मन्द्रा मृगा-
श्चाष्टत:
सर्व्वेषूत्तमभ जातिरुदितो मन्दै: करैराष्कृत: ।"
इति गजशाला ॥*॥
"अष्टोत्तरहस्तशतं पृथुत्वे
नृपालयं चोत्तममेव तस्मात् ।
अष्टाभिरष्टाभिरतो विहीनं
पञ्चैव भागाधिकतोऽपि दैर्घ्ये ॥
चशीतितो रागकरैश्च हीना:
पञ्चालया भूपसुतप्रियाश्च ।

त्रिभागदैर्घ्येऽधिकतो विधेया
गृहा. क्रमेणैव यथोदिताश्च ॥
प्रोक्तं चतुःषष्टिकरं पृथुत्वे
क्रमेण षड्भिश्च करैर्विहीनम् ।
षड्भागतो दैर्घ्यमतोऽधिकं स्या-
द्बलाधिपस्यैव च पञ्चहर्म्ये: ॥
षष्ट्या हस्तैर्मन्त्रिगेहं पृथुत्वे
हीन हीनं पञ्चकं वेदवेदै: ।
कुर्य्याद्धस्तैरष्टमांशोऽधिकोऽसौ
आसाद्ये वर्द्धितो दैर्घ्य एव ॥
सामन्तादिकभूपतेश्च भवनं विंशच्छिकहस्तै: समं
हस्तैर्वेदविहीनकै क्रमतया भागाधिकं
दैर्घ्यत: ।
देवज्ञस्य सभासदस्य गुरुत: पौरोधसं भेषजं
विंशत्यष्टकरं दिहस्तरहितं दैर्घ्यं द्विधा तद्-
भवेत् ॥
वेश्याकञ्चुकिशिल्पिनामपि गृहे वेदाधिका
विंशति-
र्मानं हस्तचतुष्टयेर्विरहितं दैर्घ्येऽधिका
याचत: ।
हर्म्या दासकरान्तिकस्य रचितो हस्तै: समं
विस्तरे
हीनं लक्ष्करेण पञ्चकमिदं तुर्य्यांशदैर्घ्याधि-
कम् ॥

द्वात्रिंशता मानमिदं द्विआटे-
हीनं चतुर्भि: क्रमतो विधेयम् ।
दिगष्टराशाब्धिविभागतश्च
क्रमेण तद्वर्णचतुष्टयेऽपि ॥
कर्णाधिकं विस्तरतोऽधिकञ्च
शीघ्रं विनाशं समुपैति गेहम् ।
द्वारं नतं मूर्द्धि यदाशतश्च
तत् सन्ततहानिकरं प्रदिष्टम् ॥
वासे सप्तितिहस्तविमुक्ते
शालामानमिदं मनुभुक्ते ।
पञ्चत्रिंशत् पुनरपि तास्मन्
मानमुशन्ति लघोरिव वृद्धा' ॥
एकं द्वारं प्राङ्मुखं शोभनं स्या।
चातुर्वर्ण्ये धातृभूपेशजेन ।
युग्मं प्राच्या पश्चिमे स्यात्त्रिकं च
मूलं द्वारं दक्षिणे ~~र्जनीयम् ॥"

इति वास्तुशास्त्रे राज     हने राजगृहादि-
लक्षणं नाम नवमोऽध्या. ॥ * ॥

शिल्पिका, स्त्री, तृणविशेष: । सञ्चान्विपी इति
हिन्दीभाषा । तत्पर्य्याय: । शिल्पिनी २ शीता
३ चीवजा ४ स्टदुच्छदा ५ । अस्या गुणा: ।
मूत्ररोधाश्मरीशूलज्वरपित्तापहारकत्वम् । इति
राजनिर्घण्ट: ॥

शिल्पिनी, स्त्री, कोलदलौषधि: । इति मेदिनी ॥

शिल्पिशाला, स्त्री, स्त्री, ( शिल्पिनां शाला । )
शिल्पशाला । इत्यमरटीकायां स्वामी ॥

शिल्पी [न्] त्रि, (शिल्पं क्रियाकौशलमस्यास्तीति ।
इनि: ।) शिल्पकर्त्ता । (यथा, मनौ । ७ । ७५ ।

"भाण्डयो: शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥")
तत्पर्य्याय: । कारु: २ । इत्यमर: ॥ अस्य विव-
रणं शिल्पकारशब्दे द्रष्टव्यम् । शिल्पसम्बन्धी
च ॥

शिव, क्ली, ( शी + "सर्व्वनिघृष्वरिष्वलष्वशिव-
पद्वप्रह्वेष्वा अतन्त्रे ।" उणा० १ । १५३ । वन्
प्रत्ययेन साधु । ) मङ्गलम् । इत्यमर: ॥ (यथा,
रघु: । १ । ६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीनाञ्च प्रतिहर्त्ता त्वमापदाम् ॥")
सुखम् । जलम् । इत्युणादिकोष: ॥ सैन्धवम् ।
समुद्रलवणम् । श्वेतटङ्कणम् । इति राज-
निर्घण्ट: ॥ ( मङ्गलवति, त्रि ॥ यथा, महा-
भारते । १ । २०८ । ३६ ।
"तत्र रम्ये शिवे देशे कौरवस्य निवेशनम् ॥")

शिव:, पु, (शी + "सर्व्वनिघृष्वेति ।"उणा० १।१५३।
इति वन्प्रत्ययेन साधु: ।) ब्रह्मण: संज्ञाविशेष: ।
तस्य व्युत्पत्तिर्यथा । शिव कल्याणं विद्यतेऽस्य
शिव: । श्यति अशुभमिति वा । शेरतेऽवतिष्ठन्ते
अणिमादयोऽष्टौ गुणा अस्मिन् इति वा शिव: ।
इत्यमरटीकायां भरत: ॥ तत्पर्य्याय: । शम्भु: २
ईश: ३ पशुपति: ४ शूली ५ महेश्वर: ६ ईश्वर:
७ सर्व्व: ८ ईशान: ९ शङ्कर: १० चन्द्रशेखर.
११ भूतेश: १२ खण्डपरशु: १३ गिरीश: १४
गिरिश: १५ मृड: १६ मृत्युञ्जय. १७ कृत्ति-
वासा: १८ पिनाकी १९ प्रमथाधिप: २० उग्र: २१
कपर्द्दी २२ श्रीकण्ठ. २३ शितिकण्ठ: २४
कपालभृत् २५ वामदेव: २६ महादेव: २७
विरूपाक्ष: २८ त्रिलोचन. २९ कृशानुरेता: ३०
सर्व्वज्ञ: ३१ धूर्ज्जटि: ३२ नीललोहित: ३३
हर: ३४ स्मरहर: ३५ भर्ग: ३६ त्र्यम्बक: ३७
त्रिपुरान्तक: ३८ गङ्गाधर: ३९ अन्धकरिपु: ४०
क्रतुध्वंसी ४१ वृषध्वज: ४२ व्योमकेश: ४३
भव: ४४ भीम: ४५ स्थाणु: ४६ रुद्र: ४७
उमापति: ४८ । इत्यमर: ॥ वृषपर्व्वा ४९
रेरिहाण: ५० भगाली ५१ पांशुचन्दन: ५२
दिगम्बर: ५३ अट्टहास: ५४ कालञ्जर: ५५
पुरह्मिट् ५६ वृषाकपि: ५७ महाकाल: ५८
वराक: ५९ नन्दिवर्द्धन: ६० हीर: ६१ वीर: ६२
खर: ६३ भूरि: ६४ कटप्रू: ६५ भैरव: ६६
ध्रुव: ६७ शिविपिष्ट: ६८ गुडाकेश: ६९ देव-
देव: ७० महानट: ७१ । इति जटाधर: ॥
तीव्र: ७२ खण्डपर्शु: ७३ पञ्चानन: ७४ कण्ठे-
काल: ७५ भरु: ७६ भीरु: ७७ भीषण: ७८
कङ्कालमाली ७९ जटाधर: ८० व्योमदेव: ८१
सिद्धदेव: ८२ धरणीश्वर: ८३ विश्वेश: ८४
जयन्त: ८५ हररूप ८६ सन्ध्यानाटी ८७
सुप्रसाद: ८८ चन्द्रापीड: ८९ शूलधर: ९०
वृषाङ्क: ९१ वृषभध्वज: ९२ भूतनाथ: ९३
शिपिविष्ट: ९४ वरेश्वर: ९५ विश्वेश्वर: ९६
विश्वनाथ: ९७ काशीनाथ: ९८ कुबेरबन्धु: ९९
फणिमाली १०० विद्याराज: १०१ त्रिकी १०२
प्रियतम: १०३ विषमाक्ष: १०४ भद्र: १०५
ऊर्द्ध्वरेता: १०६ यमान्तक: १०७ नन्दीश्वर: १०८
अष्टमूर्त्ति: १०९ अर्घीश: ११० खेचर: १११
भृङ्गीश: ११२ अर्द्धनारीश: ११३ रसनायक: ११४।
इति शब्दरत्नावली ॥ उ: ११५ पिनाक-
पाणि: ११६ फणधरधर: ११७ कैलासनिके-
तन: ११८ हिमाद्रितनयापति: ११९ । इति
कविकल्पलता ॥ तस्य सहस्रनामानि श्रीमहा-
भारते अनुशासनपर्व्वणि १७ अध्याये द्रष्ट-
व्यानि ॥ * ॥ अस्य कपालिनामकारणं यथा —

ईश्वर उवाच ।

"आसीत्तत्र वरारोहे ब्रह्मणस्तु शिरोऽपरम् ।
पञ्चमं शृणु सुश्रोणि जातं काञ्चनसुप्रभम् ॥
ज्वलन्तं परमं शीर्षं जातं तस्य महात्मन: ।
स एवमब्रवीद्देवि । जन्म जानामि ते ह्यहम् ॥
तत: क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥

ब्रह्मोवाच ।

यस्मादनपराधेन शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्त: कपाली त्वं भविष्यसि ।"

इति मात्स्ये १५८ अध्याय: ॥ * ॥

अथ शिवमन्त्रा. । तत्र एकाक्षरमन्त्रो यथा,—
"सान्तमौकारसंयुक्तं बिन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनु: प्रोक्तो भजतां कामदो
मणि: ॥" हौं ॥ * ॥

अस्य पूजा । प्रात:कृत्यादिमातृकान्यासं प्राणा
यामञ्च विधाय श्रीकण्ठादिन्यासं मातृकास्थानेषु
कुर्य्यात् । तत: सामान्यपूजापद्धत्युक्तपीठन्यास
कृत्वा पीठशक्तीर्न्यसेत् । तत. ऋष्यादिन्यास: ।
तत: कराङ्गन्यासौ । तत: ईशानाद्या: पञ्च-
मूर्त्तीर्न्यसेत । मूद्रस्तु एतत्पर्य्यन्तं न्यासं कृत्वा
ध्यायेत् । अन्यत्रानधिकारात् । तत ऊर्द्ध्वप्राग्
दक्षिणोत्तरपश्चिमेषु मुखेषु ईशानस्य पञ्चकला:
पञ्च ब्रह्म ऋच: पदादिका: प्रणवाद्या नमो-
ऽन्ता न्यसेत । तत: पूर्व्वपश्चिमदक्षिणोत्तरेषु
तत्पुरुषस्य चतस्र: कला विन्यसेत । ततो हृदये
ग्रीवायां अंशद्वये नाभौ कुक्षौ पृष्ठे वक्षसि
अघोरस्याष्टौ कला: न्यसेत् । ततो गुह्ये अण्ड-
कोषे ऊरुद्वये जानुद्वये जङ्घाद्वये स्फिग्द्वये
कट्यां पार्श्वयो. वामदेवस्य त्रयोदशकला.
विन्यसेत् । तत: पार्श्वयो: स्तनयोर्नासिकाया
मूर्द्ध्नि बाहुयुग्मे सद्योजातस्याष्टौ कला: न्यसेत् ।
तत: पञ्चाङ्गुलीषु ईशानाद्या: पञ्च ऋचो न्यसेत् ।
एव मूर्द्धास्य हृदयगुह्यपादेष्वेता ऋचो न्यसेत् ।
ततोऽङ्गन्यासान्तरं कुर्य्यात् । एवं विन्यस्य
ध्यायेत् ।

"मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखै: पञ्चभि-
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटि-
प्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्गं
भजे ॥"

एवं ध्यात्वा मानसैः संपूज्य अर्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा आवाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं पञ्चलक्षजपः ॥ १ ॥ * ॥ अष्टाक्षरमन्त्रो यथा,—

"अङ्कुशः शक्तिचन्द्रः कथितोऽष्टाक्षरो मनुः ॥"

ह्रीं ॐ नमः शिवाय ह्रीं। अस्य पूजा। प्रातःकृत्यादिशैवोक्तं पीठमन्त्रन्यासं विधाय ऋष्यादिन्यासकराङ्गन्यासान् प्राणायामञ्च कृत्वा ध्यायेत्।

"बन्धूकाभं त्रिनेत्रं शशधरकलाधरं स्मेरवक्त्रं चतुर्भि-
र्हस्तैः शूलं कपालं वरदमभयदं धारयन्तं भजामि।
वामोरूसन्निषण्णया करतलविलसच्चारुरक्तोत्पलेन
हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणाया: प्रियायाः ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपदानादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं चतुर्लक्षजपः ॥ २ ॥ * ॥ दशाक्षरमन्त्रान्तरं यथा,—

"तारो माया वियद्विन्दुमनुस्वारविभूषितम्।
पञ्चाक्षरसमायुक्तो दशवर्णो मनुर्मतः ॥"

ॐ ह्रीं ह्रौं नमः शिवाय। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं विधाय पूर्ववदृष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम्।
वामोरुस्थापीठरत्नोज्ज्वलरुधिरधराः प्रियाया-
श्चञ्चोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटङ्केष्टहस्तम् ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कृत्वा पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधाय आवरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणमष्टलक्षजपः ॥ ३ ॥ * ॥ अथास्य मृत्युञ्जयाख्यमन्त्रः।

"तारं स्थिरा सकर्णेन्दुर्भृगुः सर्गसमन्वितः।
त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युञ्जयात्मकः ॥"

ॐ जुं सः। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं विधाय ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम्।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥"

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं कृत्वा पीठमन्त्रान्तां पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षत्रयजपः ॥ ४ ॥ * ॥ अथास्यापरद्वादशाक्षरमृत्युञ्जयमन्त्रः।

"मृत्युञ्जयं समुच्चार्य्य पालय द्वितयं वदेत्।
मृत्युञ्जयं समुच्चार्य्य पुनरेव विलोमतः ॥
द्वादशाक्षरोऽयं मन्त्रः स्यात् मृत्युञ्जयाभिधोऽपरः ॥"

ॐ जुं सः पालय पालय ॐ जुं सः। अस्य पूजादिकं सर्व्वं पूर्व्ववत् ॥ ५ ॥ * ॥ अथ द्वाविंशत्यक्षरमन्त्रः।

"प्रणवो हृदयं पश्चात् ततो भगवते पदम्।
ङेऽन्तञ्च दक्षिणामूर्त्तिं मह्यं मेधामुदीरयेत् ॥
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ॥"

ॐ नमो भगवते दक्षिणामूर्त्तये मह्यं मेधां प्रयच्छ स्वाहा। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं विन्यस्य ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"वटद्रुमं महोच्चायं पद्मरागफलोज्ज्वलम्।
मारकतमयैः पत्रैर्विचित्रैरुपशोभितम् ॥
नवरत्नमहाकल्पैर्लम्बमानैरलङ्कृतम्।
विचिन्त्य वटमूलस्थं चिन्तयेल्लोकनायकम् ॥
स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलशविद्याज्ञानमुद्राः कराग्रैः।
दधतमुरगकक्ष्यं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥"

एवं ध्यात्वा मानसैः सम्पूज्य अर्घ्यस्थापनादिशैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षजपः ॥ ६ ॥ * ॥ अथास्य मन्त्रान्तरम्।

"अग्निसर्गेन्द्राधिरूढो बकविन्दुमत्।
चिन्तामणिरिति ख्यातं बीजं सर्व्वसमृद्धिदम् ॥"

र-क्ष-म-य-ऊ ँ क्षम्र्यूं। प्रपञ्चसारे।

"अगस्त्य-य-मरेन्द्र-प्राणसज्जात्मपात्र-
श्रुतिभिमधरभिन्नैरूर्ध्वविन्दूत्तमे सुमनसाः ॥"

अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं विन्यस्य ऋष्यादिन्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत्।

"नीलप्रवालरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालकशूलहस्तम्।
अर्द्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥"

एवं ध्यात्वा मानसैः संपूज्यार्घ्यं संस्थाप्य शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं लक्षजपः। अयं अर्द्धनारीश्वरः ॥ ७ ॥ * ॥

"शार्ङ्गी वह्निसमारूढस्तारवानादिमो हितम्।
शान्तो वह्निसमारूढस्तुर्य्यस्वरसमन्वितः ॥
विन्दुमांस्तु द्वितीयः स्यात् टान्तः सर्गी तृतीयकः।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः ॥"

प्रमाणान्तरम्।

"लोहितोऽग्न्यासनः षष्ठो विन्दुमान् प्रथमं पुनः।
द्वितीया वह्निबीजस्था दीर्घा शाक्तीन्दुभूषिता ॥
तृतीया शाङ्गणी सर्गी मन्त्रो बीजत्रयात्मकः।
नीलकण्ठात्मको मन्त्रो विषद्वयहरः परः ॥"

प्रों ग्रीं ठः इति मन्त्रः। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठन्यासान्तं कृत्वा ऋष्यादिन्यासं कराङ्गन्यासौ च विधाय ध्यानं कुर्य्यात्।

"बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतशेखरं जपवटीं शूलं कपालं करैः।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥"

एवं ध्यात्वा मानसैः संपूज्य अर्घ्यस्थापनादिशैवोक्तपीठपूजां विधाय पुनर्ध्यात्वा आवाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं कृत्वा आवरणपूजां विधाय धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं त्रिलक्षजपः। अयं नीलकण्ठः ॥ ८ ॥ * ॥ अस्याष्टाक्षरमन्त्रो यथा,—

"तारो हृन्नीलकण्ठाय मन्त्रश्चाष्टाक्षरः परम्।

ॐ नमो नीलकण्ठाय। अस्य पूजादिकं सर्व्वं पूर्व्ववत् ॥ ९ ॥ * ॥ अस्य पञ्चाक्षरमन्त्रः षडक्षरमन्त्रश्च यथा,—

"हृदयं चरमं वाचिन् यान्तोऽनन्ताम्बितो भवेत्।
पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ॥"

नमः शिवाय। ॐ नमः शिवाय। अस्य पूजा। प्रातःकृत्यादिशैवोक्तपीठमन्त्रान्तं न्यासं विधाय ऋष्यादिन्यासं कुर्य्यात्। ततो मूर्त्तिन्यासः। ततः कराङ्गन्यासौ। ततो गोलकन्यासः। ततो व्यापकन्यासं प्राणायामञ्च कृत्वा ध्यायेत्।

"ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥"

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं कृत्वा शैवोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्

